असूं(न्) घ्नन्ति असुहानि आयुधानि ते[षाम् आली पंक्तिः] । सापः अद्भिः सह वर्तमानः, "ऋक्पूरि"त्यादिना(पा० ५/४/७४) समासान्तः । अलीकम् असत्यं हरतीति[अलीकहृत्], क्विप् । शेषं स्पष्टम् ॥ *(भोज्यपदार्थनामानि)*

**केलाखारिकरा इतो परिभवीयः खोपरामोजटा**
**नारंगद्युतिचारवो रविमुखाः सापोऽफलध्वंसिनः ।**
**नारेलातिगकोहलोचितमतिक्रान्तः स्फुरद्भोऽपला-**
**दालिध्वस्तबलः स यस्य तनवः स्ताद्वः शिवः श्रेयसे ॥ २३ ॥**

**केलेति** । स शिवः वः श्रेयसे स्तात् । स इति कः ? यस्य तनवः, केलाखारिकराः, रविमुखाः । कः मरुत् । इला भूश्च । खं व्योम च । अरिकरः चक्रपाणिश्चेति, द्वन्द्वः ॥ सूर्यप्रभृतयः ॥ अफलध्वंसिनः । यस्य जटाः नारङ्गद्युतिचारवः ॥ पुनः स इति कः ? यः इतः= कामात्, अपरिभवी । खेभ्यः इन्द्रियेभ्यः उपरामो यस्य ॥ नारे[ला]ति । नृणां समूहो नारं तस्य इला वाचः, ताः अतीत्य गच्छतीति तथाविधः ॥ कस्य ब्रह्मणः, ऊहस्तर्कः, तस्य लोचि[त]म् अवलोकितम्, भावे क्तः । तदतिक्रान्तः ॥ स्फुरद्भः [=स्फुरत्कान्तिः] । न पलादाल्या राक्षसश्रेण्या ध्वस्तं बलं यस्य सः । अद्भिः सह वर्तमानः सापः ॥ २३ ॥ *(फलनामानि)*

**सेरामाहिमदारुहो वसुमती नेपालकल्याणकृन्-**
**मायामाहुरकोडवीडसुतनोनादेडनादापुरात् ।**
**क्ष्माधारश्चिरनौरदुर्गपरलीलाजी कुराडीशकृत्-**
**तारिग्राम वडौरसस्मरहितः सोऽव्या इति त्वां च यम् ॥ २४ ॥**

**सेरामेति** । हे अनादे ! कोडवीडसुतनो ! कोडश्च, वीट् खगेशश्च, असवः प्राणाश्च एते तनवो यस्य । डलयोरभेदः ॥ अ विष्णो । स त्वम् अव्याः । स इति कः ? यं त्वां[? यस्त्वं] मायाम् अलुनात् इत्याहुः । हे आपुरात् ! कृत्तारिग्राम छिन्नशत्रुजात । त्वम् । सेरामाहिमदारुहः । ई लक्ष्मीः, सा चासौ रामा, तया सह वर्तते । अहिमथः[= अहिमत्] । गरुडस्य आरुहः । सेरामश्चासौ अहिमदारुहश्चेति कर्मधारयः । वसुमतीनश्चासौ इपालश्च, स चासौ कल्याणकृच्चेति, क्ष्माधारः । चिरं । नौ । भवाब्धौ । अदुर्गपर[२६]लीलाजी, अदुर्गाश्च ते परे वैरिणस्तेषां लीलया आजः क्षेपो विद्यते यस्मिन् । कुत्सितराज[ज्ञां] इ[ई]ष्टे, [इति] कुराडीश[:] [तस्य] संबुद्धिः ॥ बलौरसस्प[स्म]रहितः । बलो बलभद्रः । ओ(औ)रसः स्वजातः, स्मरः । ताभ्यां हितः ॥ २४ ॥ *(विविधराज्यनामानि)*

---

२६. The MS reads परा.

भालोभेडविभाडिलेतरणमानीहालता भार हो
घोडारालतमार[२७]तारणगया जे लोह लागे भलाः ।
जेता जो धनवान वा मरहठा जीता लया राय ते
वीशाजी विजयी समस्तु महिमा पायो भयो विक्रमी ॥ २५ ॥

भालइति । स जेता जिष्णुः । अजो विष्णुः । विक्रमी । ते तव । अघोट् । समस्तु भवतु । अघम् ओषति दहति, अघोट् । क्विप् । किंविशिष्टोऽजः । भालः । भां लाति आदत्ते । भेडविभाड् । भेट् चन्द्रः । अविः सूर्यः । तयोर्भामषति गृह्णाति । इलां भुवम् । इतः प्राप्तश्चासौ रणमानी च । रणं मानयति । ईहालताभारहः स्पृहावल्ल[री]-जालत्यागी । पुनः किंविधः? आरालतमारतारणगया । आसमन्ताद् अरालतमम् अतिशयेन वक्रम् आरम् अरिवृन्दं तस्य तारणे गयातीर्थम् । अजेलोहलागेभलाः । अजो ब्रह्मा, इला सरस्वती, तरो[यो]रूहं तर्क लाति गृह्णाति । अगेभान् वनगजान् लाति ददाति, क्विप् । [अधनवा ।] अधनान् दीनान् वाति गच्छति । नवा मरहठा जीता लया राय ॥ इलेतरणमानी ॥ नवाश्च ते अमरास्तैर्हठेन आजिः संग्रामः, ताम् (तम् ?) इतं प्राप्तम्, अलयम् अभङ्गम्, आरम् अरिवृन्दं, तस्मै । तादर्थ्ये चतुर्थी । वीशेन खगेश्वरेण आज्यां विजयो विद्यते यस्य । महिमानम् आप्नोति [इति] महिमापः[२८], आयो ज्ञानं यस्य । महाज्ञानीत्यर्थः । अभयः भीरहितः ॥ २५ ॥

मागारे मागतेहो द्रविणबहुतरे भोगभोगानवेगा-
पाहारे नारसिंहः क्षितिपुरजनिभृद्दानिहो मानलाजी ।
दैत्याग्निभ्रंशलेहोलवकरिकनकप्रौढिते लोकजाले
क्षोणीसानन्दकेली करितिमिरबले राजते धीरशूरः ॥ २६ ॥

मागार इति ॥ नारसिंहो राजते । नरसिंह एव नारसिंहः । स्वार्थेऽण् । क्व राजते ? मागारे । मा लक्ष्मीस्तस्य आगारं गृहं तस्मिन् । कथंभूतः सः ? मागतेहः लक्ष्मीगता [ईहा यस्य । यदि वा लक्ष्म्यां गता विरता ईहा यस्य, धनबहुलत्वात्] । भोगभः भोगैर्भाति । कथंभूते मागारे ? द्रविणबहुतरे विभवबह[हु]ले । गानवेगा अपाहारा नारदादयो यस्मिन् । लोकजालं प्रकाशपुञ्जोऽस्त्यस्मिन् । अ-प्रत्ययः । क्षिप्तौ[क्षितौ] पुराणि, तेषु जनिभृतश्च ते दानिनश्च तेषां होमसंबन्धी स चासावनलः तत्र अजो गतिरस्ति यस्य, यग्य[ज्ञ]भोक्तृ-

२७. The MS clearly reads °आर°. The correct reading has been reconstructed on the basis of the commentary.

२८. The Manuscript reads : °मापं

त्वात्। दैत्याग्निभ्रंशला ईहा यस्य। क्षोणीसानन्दकान् राज्ञः इलति गच्छति [इति] क्षोणीसानन्दकेली। करितिमिरबले अर्थाद् रणवारणान्धकार-निकरे। धीरशूरः धीरश्चासौ शूरश्च॥ २६॥

**आमादाखवदामदाडिममहानारङ्गपिङ्गद्युति-**
**र्नानारा[य]ण आमिली परिणमन्नारेलकेलास्तुतः।**
**पाकाबीलफलादमुन्यभिनुतोऽभीष्टे मरुद्द्योततज्-**
**जम्बूरुक्फणिसाग्रजेन सहितो देयात्तवार्कः शुभम्॥ २७॥**

**आमेति।** अर्कः तव अभीष्टे शुभं देयात्। कथंभूतोऽर्कः? आमादाखवदामदाडिममहाः। आसमन्ताद् आमान् रोगान् अत्ति। आखः प्रकाशस्तद्वान् आमो गगनं यस्य।[२९] दाडिमस्य पुष्पं दाडिमं तद्वन्महो यस्य। आमादाखबदामश्चासौ दाडिममहाश्चेति कर्मधारयः। पाके परिणामे सति नारङ्गवत् पिङ्गा द्युतिर्यस्य। न आ[ना=पुराणपुरुषः] नारायणः, विष्णुरेव। अमन्ति भजन्ति आमिनस्तेषु लीयते, क्विप्। भक्तचित्ते वसतीत्यर्थः। परिणमन्त्यो नारस्य नरसमूहस्य इलाः वाचो यस्मिन्। को ब्रह्मा। इला सरस्वती। ताभ्यां स्तुतः। [यदि वा ब्रह्मणो वाग्भिः स्तुतः]।परिणमन्नारेलश्चासौ केलास्तुतश्चेति कर्मधारयः। पाके परिणामे सति अवौ पर्वते, ईम् श्रियं, लान्ति गृह्णन्ति [इति] पाकावीलानि फलानि अदन्ति च ते मुनयश्च तैरभिनुतः। मरौ मरुदेशे उद्योतं तनोतीति, क्विप्। जम्ब्वाः फलं जम्बूस्तद्वद् रुक् कालिमा येषां, ते च ते फलि[णि]नस्तान् स्यति नाशयति [इति] जम्बूरुक्फणिसः तार्क्ष्यः, तस्याग्रजोऽरुणः, तेन सहितः॥ २७॥ (*ऋतुफलानि*)

**मूलागाजरकाकडीध्वनिरतो भास्वत्करेलाघ्रधृक्**
**सेमाकोहलभोपलादरसिकः श्रीमत्ककोराकृतिः।**
**आदो वैगणतोरया लवणसो भाजी नवावालहो-**
**ऽकंदूरी कुहि रीणरेफसि हरे रक्षा रतालूनकः॥ २८॥**

**मूलेति।** हे रीणरेफसि हरे= क्षीणपापे शम्भौ, रत। अ विष्णो। आदः [प्रलयकाले सर्वान् जीवान् आदत्ते सर्वजीवाश्रय इति]। अकं दुःखं पापं च। न रक्षाः (क्ष)। मा पाहि। कथंभूतस्त्वम्? कुं भुवं जहाति [इति] कुहाः, क्विप्। तस्मिन् आकाशगामिनि,

२९. This explanation seems to be purely arbitrary since the meanings proposed for the words आखः and आमः are not supported by any dictionary.

वौ पक्षिणि गरुडे । आलं भूषां जिहीते । वै निश्चितम् । गणतः अर्थात् जीवसमूहात् । दूराद्दूरमस्त्यस्य परात्परः इत्यर्थः । रपाः रम् अग्निं प्राप्नोति, क्विप्; यज्ञभोक्तृत्वात् । न लूनं कं = सुखं येन सः अलूनकः । लवणं लवणासुरं स्यति [इति] लवणसः । अभाजी अभाया आजः क्षेपोऽस्त्यस्मिन् सः । पुनः कथंभूतस्त्वम् ? मूलागाजरकाकडीध्वनिरतः, हलम्[? read मूलम्] आद्यः, स चासौ अगः पर्वतः = मेरुः । तत्र अजराः देवाः हाहादयः । तेषां काकली चासौ ध्वनिस्तत्र रतः । भास्वत्करेलाध्रधृक्... [भास्वता करेण, इला पृथ्वी तस्याः धारकः इलाध्रो भू-]भृत्, तं गोवर्द्धनं धारयति । सेमाकोहलभः । इः कामः, मा लक्ष्मीः, को ब्रह्मा, उः शम्भुः, हलभो बलभद्रः । तैः सह वर्तमानः ॥ अपलादरसिकः । पलं मांसम् अदन्ति [इति] पलादा राक्षसाः [तेषामरसिकः शत्रुः] श्रीमत्क-कोलाकृतिः [कोलोवराहः, शोभना कोलाकृतिर्यस्य] । डलयो[रलयो]रभेदः ॥ २८ ॥ (*शाकानि*)

**अथ प्रतिलोमानुलोमचित्राणि–**

**रक्षमामक्षमाधारा क्षीरसारर्षितर्पितः ।**
**यादवावनदाभासि ज्ञानदानघ सेव्यसे ॥ २९ ॥**

**सेव्यसे घनदानज्ञासिभादानववादया ।**
**तर्पितर्षिरसारक्षी राधामाक्षम माक्षर ॥ ३० ॥**

**रक्षेति** । हे अ विष्णो मां रक्ष । क्षमाया आधारस्तस्य संबुद्धिः । किंविशिष्टस्त्वम् ? आ क्षीरसारर्षितर्पितः । क्षीरं सारं येषां ते क्षीरसारा बालाः, तान् अभिव्याप्य आक्षीरसारम् = आबालान् । ऋषिभिस्तर्पितः । यादवेभ्योऽवनं रक्षणं ददातीति यादवावनदा । आ-भासि । अनघ । ज्ञानद । सेव्यसे ॥ २९ ॥

हे घनदानज्ञ । राधामाक्षम । राधा नाम गोपी, मा लक्ष्मीः । तयोः क्षमा क्षान्तिर्यस्य सः । मा [=न] क्षरतीति । द्वे संबुद्धिः(द्धी) । तर्पितर्षिश्चासौ रसारक्षी च । दानवैः सह वादं याति, क्विप् । असिभाः स(ख)ड्गद्युतिः । त्वं सेव्यसे ॥ ३० ॥

**रक्षसाहसभासारक्षोद, मोक्षद, सारद ।**
**सारसानन देवादे त्वां नतोस्मि दयामय ॥ ३१ ॥**

**यमयादस्मितोन त्वां देवादे न न सा रसा ।**
**दरसादक्षमो दक्षो रसाभास हसाक्षर ॥ ३२ ॥**

**रक्षेति** ॥ हे दयामय, साहसभासारक्षोद, मोक्षद । सादर [read : सारद] = बलद । सारसानन पद्मास्य । देवादे । साहसेन भासो भाः यस्य तच्च तत् । आरम् अरिवृन्दम् । तस्य क्षोदो यस्मात् सः, तस्य संबुद्धिः । अहं त्वां नतोऽस्मि, रक्ष इत्यन्वयः ॥ ३१ ॥

**यमेति** । अस्मितयाऽहंभावेन ऊनः, तत्संबुद्धिः, अस्मितोन । हसो हासस्तेन युक्तानि अक्षराणि यस्य तस्य संबोधनं, हसाक्षर । देवानामादिः देवादे । स त्वम् । अस दीप्यस्व । कथंभूतस्त्वम् ? दरसादक्षमः । दरस्य सादेन अंशक्षमः । रक्षः [दक्षः] ॥ स इति कः ? यं त्वाम् । रसाभासः शृंगाररसः, तेन आभाति [आभासते] यः । सा रसा पृथ्वी । न न आयात् (read : अयात्), अपि तु त्वां जगामेत्यर्थः ।

**सानमा सरसा देवे ज्ञानदानघमालिनी ।**
**कालिका ततकालीकात्रायदा न न वोस्तु सा ॥ ३३ ॥**

**सास्तु वोऽननदायत्रा कालीका ततकालिका ।**
**नीलिमाघनदानज्ञा वेदे सारसमानसा ॥ ३४ ॥**

**सेति** । सा कालिका । वो युष्माकम् । अत्र अस्मिँल्लोके । अयदा भाग्यदा । न नास्तु, अपितु भाग्यदायिनी भवतु इत्यर्थः । कथंभूता सा ? देवे शम्भौ अ[आ]नमेन प्रणामेन सह वर्तते [इति] सानमा । सरसा । ज्ञानदा । न अघं मलते धत्ते [इति] अनघमालिनी । तता विस्तीर्णा, कानां शिरसां [आली]माला, श्रेणिर्यस्याः सा ततकालीका ॥३३ ॥

सा काली, वः । अननदा जीवनदात्री[३०] । अयो भाग्यं त्रायते [इति] अयत्रा, अस्तु । किंविधा सा ? काततकालिका, के शि[र]सि आतता विस्तीर्णा कानां मुण्डानामालिर्माला यस्याः सा । नीलिमा, श्यामत्वात् । घनं बहु ददातीति । वेदे अनज्ञा, न अज्ञा अनज्ञा, ज्ञात्री । सारसवन् मानसं मनो यस्याः सा । सारसं कमलं, शुद्धमना इत्यर्थः ॥ ३४ ॥

**[अथाद्यन्तलघ्वक्षरकेण विष्णुवर्णनम्-]**

**यदनघमतनुत यममय जय जय शरणगनवरस महिमगरहरह ।**
**सजलज वनदम सदजभमततम सगगनवनवन भवद यतिगशिव ॥३५ ॥**

**यदेति** । इः कामः, तम् अदन्ति [इति] यदः कामजितः । ते च तेऽनघाः शुकादयस्तैर्मतं नुतं यस्य [स] यदनघमतनुत । यममय यम[=योग-]प्रचुर ! शरणगनवरस । शरणं गच्छन्ति [इति] शरणगाः तेषु नवोऽपूर्वो रसो यस्य । महिमगरहरह । महिम्ना गरहं सर्पं जिहीते,

३०. अन् प्राणने (अनिति = श्वसिति, प्राणिति), अननं प्राणनं जीवनं वा ।

[read : महिम्ना गरहरं शम्भुं जिहीते = अतिशेते]। यद्वा महिमगौ च तौ र-हरौ वह्निशिवौ जिहीते, यज्ञस्य कार्यस्य वशत्वात्। जलजः शंखः पद्मं च, तेन सह वर्तमान। वनदो जलदः, तद्वन् मा शोभा यस्य स वनदमा। सदजभमततम। सन् माधवः (?सन् शम्भुः)। अजो ब्रह्मा। भानि नक्षत्राणि। तैरतिशयेन मतो मततमः। सगगनवनवन। गगने वान्ति गच्छन्ति [इति] गगनवाः देवाः। तेषां नवतानि(नवनानि= नमनानि) स्तोत्राणि, तैः सह वर्तते। भवं द्यति खण्डयति भवद। यतिं गच्छति [इति] यतिगं शिवम् यस्य [read : यतिगः शिवः, तस्य कृते शिवः कल्याणकृत्]। सर्वाः संबुद्धयः। देव त्वं जय जय। सर्वोत्कर्षेण वर्तस्व वर्तस्व॥ अन्यथा वा व्याख्या–

यत् यस्मात् कारणात्। भवान्। अनघं निष्पापम्, तापहारित्वात्। वनदं मेघं, यमं योगम्[च] अतनुत। ततः जय जय। अय भाग्य। असत् अशुभम्। अज क्षिप। भैर्ऋक्षैः। अतिशयेन मतः॥ ३५॥

अस्यैव पद्यस्य प्रातिलोम्येन शिववर्णनम्–

वशि गतिय दवभनवनवनगग समततम भजदसमद नवजलजस।
हर हर गमहिमसर वनगणरसय जय जय मम यतनुतमघनदय ॥
॥ पुनरपि तदेव॥ ३६॥

**वशीति**। गतिय, गतिं ज्ञानं याति। 'आयो[=आतो]नुपेति'(पा० ३/२/३) कः। दवभनवनवनगग। दवैर्वनैर्भान्ति दवभाश्च ते नवनवा नगाः पर्वताः तान् गच्छति, तथा च पुष्पदन्तस्तोत्रे 'प्रियदवदविष्टा[ष्ठा]य च नम'[३१] इति। समततम। समा समदृष्टिस्तता मा शोभा यस्य। भजदसमद। भजद्भ्योऽसम[+म] अतुलं फलं ददाति। नवजलजस। जलाज्जातो जलजो जालन्धरः। नवश्चासौ जलजस्तं स्यति। जालन्धरः समुद्रजः। गमहिमसर। गस्य गणेश[+स्य]महिमानं सरति, तन्मूर्तित्वात्। वनगणरसय। वनेः[=ने] गणाः प्रमथास्तेषु रसं रागं याति। यतनुतमघनदय। यतैर्यतिभिन्नु[=र्नु] ता स्तुता, मा लक्ष्मीर्येषां ते च ते घनदा भूरिदातारो जनकादयस्तान् याति प्राप्नोति। एवं गुणविशिष्ट, हे हर हर। मम वशि इच्छायां त्वं जय जय। विषये सप्तमी। आपन्नस्योक्तौ वीप्सा।

व्याख्यानान्तरम्–

हे अय भाग्य। हर हर। जय जय। इन्द्रियजयाज्जातं यमं योगम्। तनु विस्तारय, ममेत्यध्याहार[:]। तं प्रसिद्धम्। घनवदाचरन्ति घनन्ति। न घनन्तोऽघनन्तो दीनाः तेषाम् अयो भाग्यं यस्मात्। अथवा हे हर, अयतनुतमघनदय। अयेन भाग्येन तनुतमाः दीनास्तेषु

---

३१. *vide* शिवमहिम्नः स्तोत्रम्, श्लो० २९।

घना दया यस्य। यमं कीनाशम्। हर, कालाद् भयं हरेत्यर्थः। गमहिमसरवनगणरसेति पदच्छेदः। गस्य गणेशस्य महिमा यस्मात् स चासौ र-वनाभ्याम् अग्नि-जलाभ्यां सह वर्तमानः। गणेषु रसः प्रीतिर्यस्य। गमहिमा चासौ सरवनश्चासौ गणरसश्चेति कर्मधारयः। तं तं यमम् अभजत् भवान्। यज संगं भज, यज्ञं देहि इति वाऽन्वयः। इदमचलधृतिर्नामच्छन्दः। द्विकगुणितवसुलघुरचलधृतिरि[+ति] ॥ ३६ ॥

**अथ प्रथमतृतीययोश्चरणयोः सदृशवर्णनम्–**

**ध्वनन्महासिन्धुरघोरघोषै-**
**र्निह्नु[ह्नू]यते ध्वानितगह्वरान्तैः।**
**ध्वनन्महासिन्धुरघोरघोषै-**
**रप्यास्यते मुक्तिमिह प्रपन्नैः ॥ ३७ ॥**

ध्वनन्निति। इहास्मिन् कैलासे। निह्नूयते पिधीयते। का? ध्वनन्ती चासौ महासिन्धुर्मन्दाकिनी। कैः? ध्वनन्महासिन्धुरघोरघोषैः, ध्वनन्तश्च ते महासिन्धुराः वनगजास्तेषां घोरा भयानकाश्च ते घोषनिनादास्तैः। किंविशिष्टैः? ध्वानितगह्वरान्तैः। मुक्तिं प्रपन्नैः। अघोरघोषैः अपि आस्यते। अघोरमन्त्रस्य घोषो येषां ते तैः ॥ ३७ ॥।

**अथ द्वितीयचतुर्थयोश्चरणयोः समवर्णनम्–**

**अचल एष बिभर्ति महातटी-**
**र्बहु-लता-लसिता वरवारणाः।**
**परिमलभ्रमतालिकुलाकुला**
**बहुल-ताल-सिता वरवारणाः ॥ ३८ ॥**

अचल इति। एषः अचलः महातटीर्बिभर्ति। किंविधाः। बहुलतालसिताः। वरवारणाः। बहुभिर्लताभिर्लसिताः। वराः श्रेष्ठाः वारणाः करिणो यासु ताः। परिमलभ्रमितैः। अलिकुलैः आकुलाः व्याप्ताः। बहुलैस्तालैः सिता। वराणां श्रेष्ठानां, वारां जलानां रणः शब्दो यासु ताः।

**अथ चतुश्चरणेषु एकाक्षरनियमः–**

**ववाववावववावीवे**
**कः कौ कः कोककेकिकौ।**
**गोगागागगगंगागाः**
**शशासाशासशंशशौ ॥ ३९ ॥**

**ववेति।** 'को ब्रह्मणि समीरात्मयमदक्षेषु भास्करे। मयूरेऽग्नौ च पुंसि स्यात् सुखशीर्षजलेषु कम्'। को वायुः। अकौ[वौ] पर्वते। ववौ। कथंभूतेऽवौ। ईवे, ई लक्ष्मीं (°मीः)वाति [यत्र] तस्मिन्। पुनः कथंभूते? कौकः-कोककेकिकौ। के जले ओको येषां ते कौकसः। कोकाश्चक्रवाकाः, केकिनो मयूराः। तेषां कुर्भूः तस्मिन् (तस्याम्?)। आशास-शंशशौ शशास। शसयोरभेदः। तथा चोक्तम्—रलयोर्डलयोश्चैवेति[°त्यादि]। आशाम् आयतीं तृष्णाम् अस्यन्तीति आशासाः योगिनः, तेषां शं सुखं, शशं ज्ञानम्। शश गतौ। सर्वे गत्यर्थाः ज्ञानार्थाः। शासु अनुशिष्टौ। वायुर्योगिनामपि [म-]नोविकारमकरोदित्यर्थः। किंविशिष्टो वायुः? गोगागागगगंगागाः। गवा गच्छति [इति] गोगः शिवः। तस्य अगः पर्वतः, तस्य अगाः वृक्षाः, तान्गच्छति। गोगागागगा चासौ गंगा च, तां गाति गच्छति। क्विप्। गाङ् गतौ॥ ३९॥

**अथ चरण एव प्रातिलोम्यम्—**

ज्ञानदा न न दानज्ञा भासिताजिजितासिभा।
सारासाररसारासा भासते न न ते सभा॥ ४०॥

**ज्ञानदेति।** ते तव। स[+भा] भासते न, इति न। अपितु भासते शोभते। कथां(=थं)भूता सभा? ज्ञानदा न, इति न। ज्ञानं ददातीति ज्ञानदा। दानज्ञा, दानं वि[+त] रणं जानाति। भासिता राजिता चासौ आजिस्तस्यां जितं येषां ते च तेऽसयः खड्गाः, तैर्भासो यस्याः सा भासिताजिजितासिभा। सार[ा]साररसारासा। सारेण बलेन आसारः प्रसरणं, तत्र रसो रागो यस्य तत्सारासाररसं, तच्च आरम् अरिवृन्दं, तद् अस्यति क्षिपति॥ ४०॥

**अथ भङ्गश्लेषचित्रे—**

ते[ऽ]सिन्दूरं त्यजन्तो विघटितवलयोद्धारमेवाभजन्तो
भ्रश्यत्सत्कैश्यभासो भृशमरणधियः क्रान्तनानावनीकाः।
बिभ्राणा भूरिशोकं सितभवनमहाहारविश्लेषभाजो
भूपास्तेषां च दारा रणभुवि भवता चक्रिरे रेणुकेय॥ ४१॥

**ते सिन्दूरमिति।** हे रेणुकेय रेणुकानन्दन परशुराम। रणभुवि संग्रामभूमौ। भवता। ते प्रसिद्धाः भूपाः कार्तवीर्यादयः। तेषां दाराश्च। चक्रिरे। कथंभूतास्ते भूपाः, कीदृशाश्च तेषां दाराः? असिं खड्गम्। दूरमत्यर्थम्। त्यजन्तः। सिन्दूरं नागजम्। विधवाभावात्। विघटितवलयोद्धारम् अभजन्त एव। विघटितवलयश्चासौ योद्धा च, तम्। किंविधा दाराः? विघटी(= टि)तवलयानां कंकणानामुद्धारमुद्धरणम् अभजन्त

एव। पुनः कथंभूता भूपाः? भ्रश्यत्सकैलाश्य(= भ्रश्यत्सत्कैश्य-)भासः। सत् प्रशस्तं सत्कम्। कः स्वार्थी। ईशस्य भाव ऐश्यम्। भ्रश्यन्ती सत्कस्य ऐश्यस्य भाः कान्तिः येषां ते। किंविधा दाराः? भ्रश्यन्ती सतः कैश्यस्य केशभारस्य भाः कान्तिर्येषां ते। केशानां समूहः कैश्यम्। किंविधा भूपाः? भृशम् अरणधियः, अत्यर्थं विगतसमरबुद्धयः। पुनः किंविधा दाराः? भृशं मरणे धीर्येषां ते भृशमरणधियः। पुनः किंविधा भूपाः? क्रान्ता नानाविधाश्चावन्यो भूम्यो यैस्ते क्रान्तनानावनीकाः। पुनः किंविधा दाराः? क्रान्ताः नानाप्रकारा वन्यो वनानि यैस्ते। 'स्त्री स्यात्काचिन्मृणाल्यादिर्विवक्षापचये यदी'त्यमरः(३/५/७)। पुनः किंविधा भूपाः? भूरिशः अकं दुःखं बिभ्राणाः। पुनः किंविधा दाराः ? भूरिश्चासौ शोकश्च तम् बिभ्राणाः दधानाः। पुनः किंविधा भूपाः? सितभवनमहाहारविश्लेषभाजः। सितानि शुभ्राणि भवनानि च। महाः उत्सवाश्च। आहाराश्च। तैर्विश्लेषं भजन्ति। क्विप्। पुनः किंविधा दाराः? सितावद् भा कान्तिर्येषु। सितभानि च तानि वनानि (केलीजलानि ?) च। महान्तश्च ते हाराश्च। तैर्विश्लेषं वियोगं भजन्ति॥ ४१॥

**मुक्ताहारतयान्विताः प्रविलसत्कान्तारमासंश्रिता-**
**स्ते स्तम्बेरमवाजिराजिसहिता स्फाराहवारम्भिणः।**
**भ्राम्यन्तोऽत्र सदातपत्रचमराः स्वर्गाय नात्तस्पृहाः**
**प्रेक्षन्ते नरसिंहदास भवतः प्रत्यर्थिनश्चार्थिनः॥ ४२॥**

**मुक्ताहारेति**। हे नरसिंहदास राजन्। भवतः। प्रत्यर्थिनः शत्रवः। अर्थिनो याचकाश्च ते प्रेक्षन्ते। ते प्रसिद्धाः। कथंभूताः प्रत्यर्थिनः? मुक्ताहारतयान्विताः। मुक्तः आहारो येन ( =यैः), मुक्तः आ समन्ताद् हारो येन, तस्य भावः तत्ता, तया। किंविधा अर्थिनः? मुक्तानां हारो यस्य, तस्य भावस्तत्ता, तयाऽन्विताः युक्ताः। किंविधाः प्रत्यर्थिनः? प्रविलसत्कान्तारं काननम्। आसंश्रिताः। प्रकृष्टाः बिलसदः सर्पाः यस्मिन्। प्रकृष्टाः वयः पक्षिणः, तैर्लसत्। किंविधा अर्थिनः? प्रविलसत्कान्ताः, रमासंश्रिताश्च। विलसन्त्यः कान्ताः स्त्रियो येषां ते। रमां लक्ष्मीमासंश्रिताः। 'द्वितीया श्रिते'ति (पा० २/१/२४) समासः। पुनः किंविशिष्टाः प्रत्यर्थिनः? आसंश्रिताः। किम्? अस्तं क्षिप्तं वेरं शरीरम्। अवाजिराजिसहिताः, न वाजिनाम् अश्वानां राजिभिः सहिताः। किंविधास्ते अर्थिनः? स्तम्बेरमवाजिराजिसहिताः। स्तम्बेरमाः गजाः। पुनः किंविधाः प्रत्यर्थिनः। स्फारा भूयांसः। हवं यज्ञम् आरभन्ते। पुनः किंविधाः प्रत्यर्थिनः ? अत्र अवनौ भ्राम्यन्तः। सदातपत्रचमराः। दातानि छिन्नानि पत्राणि वाहनानि चामराश्च, तैः सह वर्तमानाः। किंविधा अर्थिनः? सन्ति आतपत्राणि, छत्राणि, चमराश्चामराश्च येषां ते। पुनः किंविधा

प्रत्यर्थिनः ? [स्वर्गायनात्तस्पृहाः । अयनं गमनम् । स्वर्गे अयनम् स्वर्गायनम्, स्वर्गायने स्वर्गमने आत्ता गृहीता स्पृहा यैः ते । राज्यं परित्यज्य वने भ्राम्यतां बुभुक्षाकुलानामस्माकं मरणमेव वरमिति चिन्तयन्तः] ।[३२] स्वर्गाय दिवे आत्तस्पृहान् । अत्र स्थिता एव स्वर्ग-सुखानि भुञ्जत इत्यर्थः ॥४२ ॥

**अथ पूर्वार्द्धोत्तरार्द्धयोः सदृशवर्णनं त्रिभिः (कुलकम्) –**

**सदागजाधीश्वरशस्यमानं**
**परस्वधाधायि लसत्कराब्जम् ।**
**सदागजाधीश्वरशस्यमानं**
**परस्वधाधायिलसत्कराब्जम् ॥ ४३ ॥**

**नित्यं महेभास्यमुपास्यमानं**
**गीर्वाणवृन्दारकदानवेन्द्रैः ।**
**नित्यं महेभास्यमुपास्यमानं**
**गीर्वाणवृन्दारकदानवेन्द्रैः ॥ ४४ ॥**

**नमन्महापाशमहीन्द्रवन्द्यं**
**सदानवारिप्रणतालिशोभम् ।**
**नमन्महापाशमहीन्द्रवन्द्यं**
**सदानवारिप्रणतालिशोभम् ॥ ४५ ॥**

**सदेति ॥** हे नमन् । नित्यं शाश्वतम् । महेभास्यं श्रीगणेशम् । मह पूजय । नित्यं सदाकालम् । कथंभूतं महेभास्यम् ? [स+]दागजाधीश्वरशस्यमानम् । सदा गच्छति सदागो वायुः, तस्माज्जातः हनूमान् । तस्याधीश्वरो रामस्तेन शस्यमानं स्तूयमानम् । यद्वा । सदा सततं गजाधीश्वरैर्दिग्दन्तिभिः शस्यमानम् । पुनः कथंभूतम् ? परश्वधाधा-यिलसत्कारब्जम् । परश्वधं परशुम् आधत्ते । परश्वधाधायिलसत् कराब्जं करकमलं यस्य । पुनः कथंभूतम् ? सदागजाधीश्वरशस्यमानम् । अगजा पार्वती, तस्य अधीश्वरः शंभुस्तेन शस्यमानम् । अथवा अगजा-धीश्वराभ्यां पार्वती-बृहस्पतिभ्यां शस्यमानम् । पुनः कथंभूतम् ? परस्वधाधायि-लसत्कराब्जम् । पराम् उत्कृष्टां स्वधां धा[+ र]यन्ति [दधति ?] परस्वधाधायिनो दिव्यपितरस्तान् लाति गृ[ह्णाति] परस्व[धा]धायिलः, सत्करो [रु]चिरकिरणोऽब्जश्चन्द्रो ... *(कीटभक्षितम्)*... न्सतम् ॥ ४३ ॥

---

३२. अत्र पाठभ्रंशस्य प्रतीतिर्मनसि समुदेति यतः 'स्वर्गायनात्तस्पृहा' इत्यस्य प्रत्यर्थिपक्षे व्याख्यानं टीकायां नोपलभ्यते । अतः कोष्ठकद्वयगतोऽयमंशोऽस्माभिरेव यथामति संपूरितः ।

नित्यमिति। पुनः किंविशिष्टम्? महे उत्सवे भास्यं प्रकाश्यम्। पुनः किम्? गीर्वाणवृन्दारकदानवेन्द्रैः उपास्यमानम्। गीर्वाणां [=णानां] देवानां वृन्दारकाः मुख्याः शक्रादयः, दानवेन्द्रादयस्तैः। पुनः किम्? गीर्वाणवृन्दारकदानवेन्द्रैः उपास्यमानम्। गीः सरस्वती, वाणो बाणासुरश्च, वृन्दारका देवाश्च, दानं वितरणं वान्ति गच्छन्ति[इति] दानवाः वदान्याः, इन्द्रश्चेति द्वन्द्वः॥ ४४॥

नमन्निति। पुनः कथंभूतम्? अपाशम्। अपगता आशा यस्य, निरीहमित्यर्थः। अहीन्द्रवन्द्यम्। नागेश्वरनमस्यम्। पुनः किंविधः? सदानवारिप्रणतालिशोभम्। दानवारिणा दानोदकेन सह वर्तमानश्चासौ प्रणतालिशोभश्चेति कर्मधारयः। प्रणतैर्नमद्भिः अलिभिः शोभा यस्य। पुनः किंविधः? नमन्महापाशमहीन्द्रवन्द्यम्। नमन्महापाशो यस्य सः। महीन्द्रा जनकादयः। नमन्महापाशश्चासौ महीन्द्रश्चेति। महत्यः आपो यस्मिन् [स] महापः समुद्रः, तान् अश्नाति। 'ऋक्पू'रिति (पा० ५/४/७४) समासान्तः। महापाशोऽगस्त्य-मुनिः। मही उत्सवी चासौ इन्द्रः। [म?] ही (= हा) पाशो वरुणो वा। नमन्तो महान्तश्च ते अपाशा निरीहा निराहारा वा नारदादयः, महीन्द्राः राजानः, तैर्वन्द्यम्। पुनः किंविशिष्टम्? सदानवारिप्रणतालिशोभम्। दानवारिः विष्णुः, तस्य प्रणताः प्रणामाः, भावे क्तः। तेषामालिः श्रेणिस्तस्याः शोभा, तया सह वर्तमानस्तम्॥ ४५॥

अथ सर्वयमकचित्रम्–

भीमा भीमाथदक्षा त्रिभुवनभुवनाधारभूता रभूता–
रामारामातिरुच्यालपनलपनसन्नाभिरामाभिरामा।
शान्ताऽऽशान्ता त्रिशूलप्रहरणहरणा सर्वदा सर्वदात्री
नेत्री नेत्रीकृताहस्कररुचिररुचिर्दीप्यमानाऽप्यमाना॥ ४६॥

वश्याऽवश्यायभूभृद्दुहितुरहितुराषाड्विलासाऽविलासा-
नीहाऽनीहारहारप्रकरकरककोज्जृम्भकाशाभकाशा।
स्तुत्याऽस्तु त्यागशीला शुभसितभसितभ्राजमानाजमाना
नित्याऽ नित्या न भक्त्या तनुरतनुरसौ भाग्यसौभाग्यदात्री॥४७॥

भीमेति। असौ ऐशी शाम्भवी। अतनुर्महीयसी। तनुर्मूर्तिः। भाग्यसौभाग्यदा अस्तु भवतु, भाग्यं च सौभाग्यं च ददाति। कथंभूता तनुः? भीमा भयानका। भीमाथदक्षा भी[=भि]यो [यो] माथः [मथनं, निरसनम् इति यावत्] तत्र दक्षा। भीमा भयभेत्री (=त्त्री). [च] इति विरोधः। त्रिभुवनभुवनाधारभूता। त्रिभुवनं जगत्त्रयम्। भुवनं जलं, तयोराधारभूता। सजलमौलित्वात्। रभूता, रोऽग्निः, [त-]स्माद् भूः [=जनिः]

यस्य सः, गुहः, तेन ऊता युक्ता। आरामे वने आरामः क्रीडा यस्याः सा। अतिरुच्या लपना, लपनाश्चासौ संना[सन्ना]भिश्चासौ रामा उमा, तया अभिरामा मनोज्ञा। पुनः कथंभूता? शान्ता शमयुक्ता। आशान्ता आशा तृष्णा, तस्या 'अन्तो नाशो यस्यां सा। त्रिशूल-प्रहरणेन हरणम्, अर्थात् रिपूणाम् यस्याः सा। सर्वदा। सर्वदात्री सर्वं ददाति। नेत्री नियमनशीला। नेत्रीकृताहस्कररुचिररुचिः। अहस्करः[दिनकरः]। रुचिं प्रीतिं राति ददाति, रुचिररुचिश्चन्द्रश्च। नेत्रीकृते अहस्कर-रुचिररुची सूर्याचन्द्रमसौ यया सा। दीप्यमाना = विराजमाना। अमाना अनहंकृतिः ॥ ४६ ॥

**वश्येति**। अवश्यायभूभृद्दुहितुः = पार्वत्याः। वश्या ॥ अवश्यायो हिमम्। अहितुराषाड्विलासा। अहितुरासाहोऽहीन्द्रस्य विलासो यस्यां सा, तद्भूषणत्वात्। अविलासा अवौ पर्वते लासो यस्याः सा। अनीहा न ईहा स्पृहा यस्याः सा। नीहारहारप्रकरककरकोज्ज(जृ)म्भका[शाभ] काशा। नीहारो हिमं च, हारप्रकरकश्च। कः स्वार्थे। करकाः वर्षोपलाश्च। उज्जृम्भकाशानि च, [फुल्लानि] काशस्य पुष्पाणि। तदाभः काशो यस्याः, सा स्तुत्या स्तोतुं योग्य[ा]। त्यागशीला। शुभसितभसितभ्राजमाना। शुभं पवित्रं, सितं शुभ्रं, भसितं भस्म, तेन भ्राजमाना। शानच्। अजमाना, अजस्य विष्णोर्मानः पूजा यस्यां सा। नित्या ध्रुवा। भक्ता[क्त्या] च नित्या, न दूत्या [? भक्त्या] अनित्या, अप्राप्या ॥ [शेषं पूर्ववत्] ४७ ॥

**युग्मम्–**

**कालीं कालीं विशुद्धां हिमरुचमरुचद्व्यापि नाकं पिनाकं**
**भावी भावीतिहोत्रं रुचिररुचिरमद्धूममालं ममालम्।**
**योगं योगं च विभ्रज्जनभजनभरोद्धूततापं ततापं**
**सद्यः स द्योःपतीज्यो भवतु भवतुदाभीलताभीलताभित्॥ ४८ ॥**

**पाता पातालतीव्रंविषमविषमधाद्यः पुराणः पुराणां**
**शास्ता शास्तारिवर्गोऽतनुत तनुततिं भासलीं भासलीलाम्।**
**कृत्त्याकृत्या दधत्योद्धवलिमबलिमद्धामदामामदामा**
**दद्यादद्यायमीशोधिमहितमहितध्वान्तवारं तवारम् ॥ ४९ ॥**

**कालि[ली]मिति** ॥ स शिवः। मम। सद्यः शीघ्रम्। भवतुद् भवतु। भवं संसारं तुदतीति भवतुत्। क्विप्। आभीलताभीलताभित्। आ अभितो भियं लाति आभीलं कष्टं, तस्य भावः। आभीलता च, भीलता भयपरम्परा च, ते भिनत्तीति। क्विप्।

द्योःपतीज्यः । द्योः पति[रिन्द्र]स्तेन इज्यः पूज्यः । स इति क ? यः । रुचिररुचिः सुन्दरद्युतिः । भावी जन्मी । पुं ना पुमान् । अरुचत् अद्युतत् । कथंभूतः ? अलम् अत्यर्थम् । कालीं पार्वतीम् । कालीं मुण्डमालाम् (कानां शिरसाम् आलीम्) । विशुद्धां निर्मलाम् । हिमरुचं चन्द्रम् । व्यापि व्यापकम् । कं जलम् । पिनाकं धनुः । भाः द्युतिः । वा[वी]तिहोत्रम् अनलम् । किंविधम् ? अमद्धूममालम् । अमन्ती गच्छन्ती धूममाला यस्य । जनभजन-भरोद्धूततापम् । योगमष्टाङ्गलक्षणम् । ततापं, विस्तृतं जलम् । अगं कैलासं च । बिभ्रत् धारयत् । उष्णं च । 'डुभृञ् धारणपोषणयोः' । जनानां भजनेन भरेण उद्धूतः अपास्तस्तापो यस्मिन् । योगस्य विशेषणम् ॥ ४८ ॥

**पातेति** । अद्येदानीम् अयमीशः । अरं शीघ्रम् । तव । अधिमहि महीमधिकृत्य । अहितध्वान्तवारं वैरिभूताज्ञानकूटम् । अद्यात् भक्षयतु । किंविधः स ईशः ? मदामात् । मद एव अमो रोगस्तमत्तीति । क्विप् । उद्धवलिमबलिमद्धामदामा । उत्कृष्टो धवलिमा यस्मिँस्तत् । बलिनो बलवतो दानवान् मथ्नाति । क्विप् । उद्धवलिम-बलिमद्-धामदाम यस्येति बहुव्रीहिः । पुनः किंविशिष्टः ? कृत्त्या चर्मणा उपलक्षितः । किंविधाया [°धया] कृत्त्या ? विलासं दधत्या । कार्यकारणभूतया । आकृत्या आकारेण । भसलो भ्रमरः । अयं कः ? यः पुराणः पुरातनः । पुराणां पुरनामदानवानाम् । शास्ता । आशास्तारिवर्गः । आशासु दिक्षु अस्तः क्षिप्तोऽरिवर्गो येन सः । तनुततिं मूर्तिपरम्पराम् । अतनुत विस्तारयामास । अन्धकादीन्तु [दीन् हन्तु-][33]मनेकावतारानग्रहीदित्यर्थः । पुनः स इति कः ? यः पाता रक्षिता । पातालतीव्रम् और्वानलदुःसहं, विषमविषम् अधात् पपौ । धेट् पाने । 'और्वानलेऽपि पाताल' इत्यमरः (३/३/२०१) ॥ ४९ ॥

**राजाऽऽराजार्चितत्वं वितनुरवितनुर्व्योमदेहो मदेहः**
**कीला-कीलालकायो ऽविरतविरतहृद्यो वधूतोऽवधूतः ।**
**वायुर्वायुःप्रदो भू[34]रजनि रजनिभृद् भ्राजते ऽभ्राजतेजा**
**जन्तौ[जन्तौ][35]य आत्मा स भवदभवदः शंकरः शं-करः स्तात् ॥५० ॥**

अथ भगवतोऽष्टौ मूर्तीः प्रकाशयन् यमकवैचित्र्येण कविः स्तौति । **राजेति** । शं सुखं करोतीति शंकरः । स शंकरः भवदभवदः स्तात् भवतु । भवताभमव [= मभवं]

---

३३. A case of haplography (अन्धकादीन् हन्तुं >अन्धकादीन्तु)

३४. भू is a conjectural reading (based on the 'पृथ्वी' of the commentary) since this portion of the leaf has been eaten away by worms.

३५. The MS drops one जन्तौ due to haplography.

जन्माभावं ददाति। स इति कः? यः राजा, राजतीति राजा, अजार्चितत्वम् आर। ऋ गतौ। अजो विष्णुर्ब्रह्मा च, तेन अर्चितः, तद्भावस्तत्वम्[तत्त्वम्]। कथंभूतः? वितनुः अमूर्तिः। अविः सूर्यः। विरोधाभासः। व्योमदेहः। अमदेहः। अमदेषु मदरहितेषु यतिषु ईहा यस्य। यः कीला ज्वाला, अग्निमूर्तिः। कीलालकायः जलमूर्तिः। अविरतं सततम्। विरतं विरक्तं हृदयं यस्य। वध्वा ऊतः स्यूतः युक्त इत्यर्थः। अवधूतः योगी। विरोधाभासः। वा समुच्चये। आयुःप्रदो, वायुः अनिलतनुः। पृथ्वी अजनि। रजनिभृच्चन्द्रः। भ्राजते शोभते। अभ्राजतेजाः अभ्रे आकाशे आजो गतिर्यस्य तद् अभ्राजं, नक्षत्रं, तद्वत्तेजो यस्य। जन्तौ जन्तौ प्रतिप्राणिनि आत्मा क्षेत्रज्ञरूपेण यः स्फुरति॥ ५०॥

अथ श्लोकत्रयकुलकेन शिवस्तवनम्–

लोलोल्लोलौघनृत्यज्जलजजलजवभ्रामराली-मराली-
मालामालानगङ्गाविलसितलसितोत्कंप्रवाहं प्रवाहम्।
शेषा शेषाग्र्यभोगद्युमणिभमणिभोद्भासिताभ्रं सिताभ्र-
श्रीकं श्रीकण्ठरम्यं सकलशकलभृद् धूमलोद्धूमलोलम्॥ ५१॥

भाले भालेक्षणेऽर्चिर्मदनसमदनं मुण्डमालीडमाली-
र्निघ्नन्निघ्नानुकम्पं कलयदकलयज्ञानिदानं निदानम्।
श्वेताश्वेतान्तकान्तं मुनिगमनिगमानूह्यमानं ह्यमानं
जालं जालन्धरादेर्विधुतविधुतरं दातमोहं तमोहम्॥ ५२॥

विभ्राड्विभ्राजिकैश्यच्छविभवविभवत्साध्वसत्साध्वसच्छिद्
दक्षादक्षालिजेत्रा शमितशमितमो घस्मराघस्मराधि।
नत्या न त्यागहीनं शमदमशमदद्दानवद्दानवर्द्धि-[३६]
ब्रह्म ब्रह्मादिभिर्यन्नमसितमसितं सेव्यतां सेव्यतां तत्॥५३॥

लोलेति त्रिभिः श्लोकैः सह संबन्धः। सेव(व्य)तां सेव्यत्वम्। यत् गच्छत्। तत् प्रसिद्धम्, ब्रह्म, शिवाख्यं सेव्यताम्। कर्मणि यक्। किंविशिष्टं तद् ब्रह्म? असितम्, अकारो विष्णुस्तेन सितं युक्तं, षिञ् संबन्धे। पुनः किंविधम्? ब्रह्मादिभिः नमसितं[=प्रणमितम्],[३७] । ति(=त)दिति किम्? यत् तमः अज्ञानम् अहन् जघान। पुनः

३६. The MS reads शम_(?) छामनवछामवर्द्धि। The text has been restored with the help of the commentary.

३७. The past participle of the nominal verb नमस्यति (<नमस्).

किंविधं ब्रह्म ? लोलोल्लोलेति । लोलोल्लोंघैस्तरलकल्लोलसमूहैः नृत्यज्जलजं [शत-]पत्रं, तद्‌गतज्ज(ञ्ज)लं [=मकरन्दः], तत्र ज[वो] वे[गो][३८] यस्याः सा चासौ भ्रामरा[ली] भ्ररमर (=भ्रमर-) संबन्धिनी भ्रामरी, सा चासौ आली, पंक्तिः । मराली हंससंबन्धिनी माला च, तस्याः मा लक्ष्मीस्तस्या आलानं, सा चासौ गङ्गा, तस्याः विलिसतं (विलसितं) विलासस्तेन लसितः उत्कृष्टः कंप्रवाहः जलौघो यस्मिन् तत् । आलानां(नं) बन्धनम् । पुनः किंविधं(धः) प्रवाह(हः)? प्रकृष्टा वाहवाहवो (वाहाः वायवो) यस्यास्तत् ।

शेषेति । शेषस्य शेषनागस्य अशेषाः समग्राश्च तेऽग्र्यभोगा उत्तमफणास्तेषु द्युमणिभाः सूर्यद्युतयश्च ते मणयस्तेषां भाभिरुद्‌भासितं प्रकाशितमभ्रमाकाशं येन तत् । सिताभ्रः कर्पूरस्तस्येव श्रीः सो(शो)भा यस्य तत् । श्रीयुक्तः कण्ठस्तेन रम्यम् । कलाभिः सहितः सकलश्चन्द्रस्तस्य शकलं खण्डं बिभर्ति, क्विप् । धूमलोद्धूमलोलम् । धूमलं धूम्रं तच्च तद् धूमं तेन लोलम् ॥५१ ॥

भाले इति । भां द्युतिमालाति गृह्णाति भालस्तस्मिन् भालेक्षणेऽर्चिर्ज्योतिः । कलयद् दधत् । किंविधम् अर्चिः ? मदनस्य सम्यक् अदनं मदनसमदनम् । पुनः किंविधम् ? मुण्डमालिनो भैरवादीन् ईष्टे(ईट्=ईशः), क्विप् । अमाली रोगावलीः । निघ्नत् नाशयत् । निघ्नानुकम्पं, निघ्नेष्वायते[त्ते]षु अनुकम्पा कृपा यस्य । अकलयज्ञानिदानम् । अकं दुःखं तस्य लयो नाशो येषु ते अकलयाश्च ते ज्ञानिनश्च तेभ्यो दानं वितरणं यस्मात्तत् । मुनिगमनिगमानूह्यमानं । मुनीनां गमो ज्ञानं ते निगमा वेदास्तैरनूह्यमानम् अतर्क्यमाणम् । अमानं । मानं मितिस्तेन रहितं विराडूपमित्यर्थः । पुनः किंविधम् ? विधुतविधुतरम् । विधुतं कम्पितं विधोर्विष्णोस्तरो बलं येन तत् । शरभरूपेण नृसिंहबलमकम्पयत् किल । दातः छिन्नो मोहो येन तत् । केवलं तमोहन्निति न । जालन्धरादेर्जालं समूहम् अहन् जघान । जालन्धरो दान[वः]....ष....(*कीटदष्टम्*)[३९] इति शेषार्थः ॥ ५२ ॥

विभ्राडिति । पुनः किंविधं ब्रह्म ? विभ्राट् । विभ्राजते, क्विप् । विभ्राजिकैश्यच्छवि । विभ्राजिनः कैश्यस्य केशानां समूहस्य जटाभारस्य छविः कान्तिर्यस्मिँस्तत् । भवविभवत्साध्वसत्साध्वसच्छित् । भवे संसारे विभवत् समर्थीभवत् साधूनामसद् अशुभं साध्वसं भयं च तच्छिनत्तीति । दक्षमत्तीति दक्षात् । दक्षः प्रजापतिः । अक्षालिजेतृ, अक्षाणि इन्द्रियाणि तेषामालिः पंक्तिस्तज्जेतृ । आशमित-शमि-तमो-घस्मराघस्मराधि = आसमन्तात् शमिताः शान्ति प्रापिताः शमिनां तमोऽज्ञानं च, घस्मरा अद्मरास्ते च

---

३८. It is a conjecture since the letters वो and गो are eaten away by insects. The same is the case with शत of शतपत्रं occuring previously.

३९. – तस्य हन्तारम् । नीलकण्ठत्वाद् वपुषः श्वेताश्वेततया अन्तं नितान्तं कान्तम् । अथवा अन्तकस्य यमराजस्याप्यन्तकृतम्, मृत्युभीतिविनाशकत्वात् । (संपादकेन पूरितम्) ।

ते अघस्मराधय:, अघानि व्यसनानि, स्मर: काम:, आधिर्मानसी व्यथा, "अंहो दु:खव्यसनेष्वघ"मित्यमर:।[४०] आशमिता: शमिनां तमोघस्मराघस्मराधयो येन तत्। पुन: कथंभु(भू)तम्? नत्या प्रणामेन त्यागहीनं न। शमं शान्तिं ददाति शमदम्। अ-शम् असुखम् अदत् नाशयत्। दानं वितरणं तद्व[-]तश्च ते दानवास्तेषामृद्धिर्यस्[मा]त्तद् ब्रह्म, ईदृग्विधं, धीरै: सेव्यतामित्यन्वय: ॥५३ ॥

कुलकम्–

वीर श्रीनरसिंहदास भवता वीरश्रियं बिभ्रता
हन्तु[म्] शात्रवपार्थिवान् रणमुखे खड्गस्त्वयोद्धृत:
[त्वया चोद्धृत:/यदा चोद्धृत:][४१]।
योगिन्य: प्रहसन्ति, हृष्यति हर: सार्धं मधुध्वंसिना
सूर्य: कम्पमुपैति, विस्फुरति च स्वर्द्वार(स्वर्वार-) बिम्बाधर: ॥ ५४ ॥

अथ ध्वनि:। वीरेति। 'एतन्निहतारिमेदोमांसैस्तृप्तिं यास्याम' इति योगिन्यो हर्षात् प्रहसन्ति। 'रणमुखनिहतातिसत्त्वाधिक[°सत्त्ववतां ?] महाधी(= वी)राणां [शिर:-]स्रजा मम भूषणं भविष्यती'ति हरो हृष्यति। 'अनेनैव शत्रवो निहता:, अहमवतारग्रहणसंकटे [न] पतिष्यामी'ति हृष्यति हृषीकेश:। 'समरनिहता वीरा मम मण्डलं भेत्स्यतीति (भेत्स्यन्तीति)' सूर्य: कम्पते। महावीरवरणोत्सुका अप्सरस: शृङ्गारं चक्रुरित्यर्थ: ॥ ५४ ॥

अथ रससंकर:–

त्वद्धाटीमभिशंक्य शात्रवनृपा: स्वप्नेषु निद्रालव:
स्फालत्कङ्कणकेणदृग्भुजलताबन्धाद् विकृष्यात्मन:।
शस्त्रं शस्त्रमितीरितोद्धतगिर: सावेगमभ्युद्गता
लोके हम्मदसाहसप्रहसिता: स्वा: कामिनी: कुर्वते ॥ ५५ ॥

---

४०. The commentator seems to have quoted from his memory. The correct reading (Amarakosa 1.4.23) is : कलुषं वृजिनैनोऽघमंहो दुरितदुष्कृतम्।

४१. That is : खड्गो यदा चोद्धृत:। Though it is certain that the original reading in the Manuscript was खड्गस्त्वया चोद्धृत:, Yet since the agentive subject भवता is already present in the sentence, the use of another subject त्वया is not only superfluous but also totally undesirable.

त्वद्धाटा(टी)ति स्पष्टार्थोऽयम्।[४२]

अथ श्रृङ्गारानुमोहिनो वीरः–

मग्नं दर्भाग्रमभ्युद्धर चरणतलान्मोच्यतां केशपाशः
संश्लिष्टः कण्टकिद्रौ, स्तनजघनभराद्धावितुं नालमस्मि।
शीघ्रं मा नाथ यासीरिति जवनभवद्भीमधाटीभयार्ता[ः]
कान्तारेष्वारराम[ाः] प्रियमभिदधते हम्मद क्ष्मामहेन्द्र॥

मग्नमिति स्पृष्टारथो (स्पष्टार्थः)।

पृथ्वीमाहि सुवर्णधार वरसे मेघावली सारिखो
थारो सत्करुदानलम्पटु महोदारस्तवे रायगः।
श्रीमन्मोकलकल्पवृक्ष कलिमा राजा भया मागता-
घोडापालकरत्लभूषणलहे श्रीभोगभोगे भलाः॥ ५७॥

[पृथ्वीति]। हे पृथ्वीमाहि। सुवर्णधार। वर श्रेष्ठ। पृथ्वी [पृथिव्यां] भुवि, माहः पूजाऽस्त्येषां पृथ्वीमाहिनो विद्वांसः, तेषु सुवर्णस्य धारा यस्य सः। तस्य संबुद्धिः। कलिमारिः(°रः)। कलिं मारयति जयति, यद्वा कलौ मारः कामः सुरूपत्वात्। अजाभयामागतः। अजा माया भयं भीतिश्च, अमो रोगश्च, तान् गतस्तस्य संबुद्धिः। अघोडापालकरत्लभूषणा। अघानि आषन्ति[ओषन्ति] दहन्ति अघौषः साधवस्तान् आपालयति, रत्लभूषणानि लाति[=राति, रलयोरभेदत्वात्] ददाति। श्रीमन्मोकलकल्पवृक्ष। त्वं पटुसर्मर्थ (पटुः समर्थः)। आनलम् अनलसंबन्धि महस्तेजः, सेमे इः कामः मा लक्ष्मीस्ताभ्यां सह वर्तमानः सेमः श्रीशः, तस्मिन् वर्तमानम्। आरः आगमः। अथ कात्स्न्येंन, अथेत्यव्ययं "मङ्गलानन्तराम्भप्रश्न-कार्य्येष्व[कात्स्न्येंष्व]थो अथ" इत्यमरसिंहः(३/३/२४६)॥ किंविधस्त्वम्? अघावलीसारिखः 'अहं (= अंहो cf. अमरकोश १/४/२३) दुःखव्यसनेष्वघम्' अघानामावलि(ः) श्रेणिस्ता (तां) सरंमि (सरन्ति) गच्छन्ति ते पापिनस्तान् खायति हिनस्ति। 'खै स्थैर्ये खननहिंसनयोः'। आतोनुपेति (पा०३/२/३) कः। असत्करुत्। असदमङ्गलं, कः स्वार्थे, असत्कं रुणद्धि दूरान्निवारयति, क्विप्। त्वं रस्तवेरायगाः। गा धेनूः। अहाः[तत्याज, दत्तवानित्यर्थः]। रः अग्नेस्तवेराः स्तुतिवाचो यस्य सः, तस्मै

---

४२. Cf. the satircal remarks of भोज on the majority of the commentators:
"दुर्बोधं यदतीव तद्धि जहति 'स्पष्टार्थ' इत्युक्तिभिः
स्पष्टार्थेष्वतिविस्तृतिं वितनुते व्यर्थैः समासादिभिः"।
However it may be conceded that this and the following verse are relatively easy to comprehend.

सग्निकाय विप्राय । श्रीभोगभः । श्रियो भोगा राज्यश्रीभोगास्तैर्भाति । अगेभान् पर्वतगजात् (न्) लाति(=राति) ददाति, [read रा दाने, रलयोरभेदः] क्विप् ॥ ५७ ॥

श्रीगोधूमचणौग्र्यवज्जवनविः सज्जोधलाभादुली
लोलं कोड्रिदमाङ्गिगास्तिलकवत्संकोदवादाच्युत ।
रातावालवटाणकैटभमहन्सोमुंगदालीभिदा-
राली(ला) शालिमसूरतोरि वहसे भिन्दद्धरैरच्चि(र्चि) त ॥ ५८ ॥

श्रीगविति । हे अच्युत नारायण । दवाद, दवो दवानलस्तमत्ति भक्षयति, तत्संबुद्धिः । हे बालवटाण, वटे वटवृक्षे आणः शब्दो यस्य सः । बालश्चासौ वटाणश्चेति कर्मधारयः । तथा च 'वटस्य पत्रस्ये'ति[४३] । स त्वम् अमुं कैटभम् अहन् जघन्थ । हे वरश्रेष्ठ, रतोऽग्नितः, रोऽनलः, सार्वविभक्तिकतस् (= तसिल्), अर्चितः सन्, ऐः अगाः । यज्ञपुरुषत्वात् । त्वम् अरि(रिं) =चक्रं वहसे धारयसि । कथंभूतस्त्व(म्) ? गदालीभि[त्] । गदा रोगास्तेषामालिं भिनत्ति [इति] क्विप् । 'सुदर्शन महाज्वाल छिन्धिच्छिन्धि' इति स्मरणात् । आरालाशालिं भिन्दन् । आरम् अरिसमूहः, अलति अलं करोति । आराला चासौ आशालिस्तृष्णाश्रेणिस्तां छिन्दन्, कथंभूतस्त्वं ? श्रीगः श्रिया गच्छति । पुनः कीदृक् ? धूमचरणौ (=चणौ)ग्र्यवज्जवनविः । 'तेन वित्तश्चञ्चु (चुञ्चुप्)चणपौ' (पा० ५/२/२६), धूमेन वित्तो धूमचणोऽग्निस्तस्य औग्र्य(यं) विद्यतेऽस्मिन्, जवनो वेगवान्, धूमचणौग्र्यवान् जवनो विः पक्षीन्द्रो यस्य । पुनः कीदृक् ? सज्जो धलाः । सन्तः साधवस्तेभ्यो जायन्ते सज्जाः, कुला(ली)नाः । ते च ते उधाः शिवधारकाः, उं शिवं दधति उधाः शैवास्तान् लाति गृह्णाति अङ्गीकरोति, क्विप्, सज्जोधलाः । भादुलीलः । भातीति भात् । भासमानश्चासौ उः शंभुस्तस्येव लीला यस्य सः । लंकोट् । लङ्कामोषति दहति । इदमाः । इः कामस्तस्य दमो दमनं येषु ते इदमा योगिनस्तान् अषति गृह्णाति । क्विप् । अषञ् दीप्तौ ग्रहे गतौ(cf. अष गतिदीप्त्यादानेषु, पा० धातुपाठः) । इगाः, इः कामस्तं गाति गच्छति । गाङ्गतौ । तिलकवत्सत्कः । तिलको विद्यते यस्मिँस्तत् तिलकवत् । सत् शेवनं [? read शोभनं], कं शिरो यस्य सः । राता, रा [दा]ने, दाता । असूः न विद्यते सूर्जन्म[४४] यस्येति श्लोकार्थः । *(धान्यनामानि)*

**काकी काकोदर तव शिरस्यारटत्येव यत्त्वां**
**मामी मामा धवविहगजास्त्रोटिघाताः पतन्तु ।**
**भाभी भाभो वहलितमहास्ते भयं मा रमेशो**
**दादाजीजीवहितहृदयस्तं शरण्यं स्तुहीहि ॥ ५९ ॥**

---

४३. **Refers to the famous verse : वटस्य पत्रस्य पुटे शयानम्, बालं मुकुन्दं शिरसा नमामि ।**

४४. **In the MS only the letters सर्ज (सूर्ज्ज) and the upper half of म is visible.**

**काकीति।** कश्चित् पान्थः पथि सर्पशिरसि काक[+का-]मिनीं रटन्तीं दृष्ट्वा जगाद। हे काकोदर, सर्प। यद्यस्मात् कारणात्। काकी। तव। शिरसि। आरटति। एव निश्चितम्। तस्मात्। त्वाम्। अमी माधवविहगजाः। त्रोटिघाताः। मा। पतन्तु। त्रोटिश्चञ्चुः। रमेशः। ते तुभ्यम्। भयं मा दात्। वहलितमहाः [=उग्रतेजाः]। आजीजीवहितहृदयः। आज्या (आजौ?) संग्रामे ये भीता जीवास्तेभ्यो हितं हृदयं (हृदये) यस्य सः। भाभीभाभः। भान्तीति भाः। अभियः भीरहिताः। ते च ते इभाः गजाः, तेषु आभा प्रभा यस्य सः। रणगजेषु स्वतेजः प्रकाशयतीत्यर्थः। तदेवम्। एहि गच्छ। स्तुहि च॥ ५९॥ *(संबन्धिनामानि)*

**श्रीमद्गोपीविलासप्रभृतिनवरसश्रव्यकाव्यौघकर्ता**
**सावित्रीनन्दनः श्रीहरिगणसुधियो मालवीयस्य सु(सू)नुः ।**
**भूदेवो योगदेवो रुचिरभररचद् दुष्करं शब्दचित्रम्**
**[नेक्ष्वि][45]च्छुः स्यात् प्रकामं मधुरतररसास्वादु(द) कृज्जातु जन्तुः॥ ६०॥**

॥ इति श्रीयोगदेवकविविरचिता शब्दचित्रावली समाप्ता॥

श्रीमदिति। स्पष्टोऽर्थः।

॥ इतिश्रीवासुदेवविरचिता शब्दचित्रावलीव्याख्या समाप्ता॥

---

४५. Two latters (both long syllabes) at this spot are totally eaten away by worms causing a hole in the folio. नेक्ष्वि is an arbiterary conjecture of the editor which takes into view the purport of the statement contained in the last pāda of the verse.